भट्टनारायणाद्यनुमतं समीचीनमवोचाम। समिदाधानस्य प्रधान-कर्म्मान्तरतयोपनयनकर्म्मानङ्गत्वात् अहःशेषस्थितेस्तादर्थ्याच्च ॥ ० ॥ ५० ॥ ० ॥

इयमपरा सूत्रद्वययोजना,—

## यथार्थम् ॥ ५१ ॥

प्रकृतस्य सावित्रचरोरवसाने यथार्थं यथाप्रयोजनं यथाप्राप्तमित्येतत्। किमनेनोक्तं भवति? एतदनेनोक्तं भवति। उपनयनव्रतान्ते सावित्रहोमं कृत्वा, अग्ने व्रतपते—इत्यादिमन्त्रैः सूत्रयिष्यमाणविशेषैराज्येन व्रतसमापकहोमञ्च कृत्वा, तन्त्रं समापयेत्—इति। स खल्वयमाज्यहोमः सर्व्वेष्वेव व्रतान्तेषु स्यादिति वच्यामः ॥ ० ॥ ५१ ॥ ० ॥

## गौर्दक्षिणा ॥ ५२ ॥

इयं दक्षिणाऽप्युपनयनव्रतस्यैव। एतदपि परस्तादुपपादयिष्यामः। अस्यामपि वर्णनायामुपनयनकर्म्मणः प्राचीनैव परिसमाप्तिः, दक्षिणा च गौरेव स्यात्, पूर्वोक्तकारणात्—इति न कश्चिद्विरोधः। परन्तु सावित्रचरोः कर्म्मक्रमस्यासूत्रणात् यथार्थमित्यस्य कर्म्मापवर्गपरत्वावगतेश्च पूर्व्वैव योजना समीचीनेति प्रतिपद्यामहे। अतिक्रान्तसंबन्धस्याचार्य्यस्यानुमत इत्यावेदितमधस्तात् ॥ ० ॥ ५२ ॥ ० ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मज-श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये द्वितीयप्रपाठकस्य दशमी खण्डिका ॥ ० ॥

॥ समाप्तश्चायं द्वितीयः प्रपाठकः ॥

